अन्नादिति प्रजापत्यश्वि सरस्वतीन्द्रा ऋषयोतिजगतीछन्दः शुक्रो देवता शान्ति प्रतिमायां शुक्रस्थापने विनियोगः—ॐ अन्नात्परिस्रुतोरसं ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमंप्रजापतिः । ऋतेनसत्यमिन्द्रियं विपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदं पयोऽमृतंमधु । ॐ एतन्ते देव० इति प्रतिष्ठाप्य । ॐ शुक्रायनमः, इति सम्पूज्य श्वेतवस्त्रेणावेष्ठ्य उपायनं निवेद्य, अष्टोत्तरशतंशुक्र मंत्रं जप्त्वा, ततः श्वेतगन्धाक्षत मुक्ताफल दुग्धमिश्रित जलमंजलौनिधाय उत्तिष्ठन्नर्घं दद्यात्तत्रमन्त्रः— ॐ दैत्यमन्त्री दिवादर्शीचोशनाभार्गवः कविःश्वेतोथमंडलीकाव्यो विधिस्थोभृगवेनमः इत्यर्घ वारिणा प्रतिमांसंस्नाप्य मुक्ताफलंनिवेदयेत् । ततः श्वेतपुष्पाक्षतः प्रार्थयेत्—ॐ त्वत्पूजयानयाशुक्र सम्मुखत्वसमुद्भवं । दोषं विनाशयक्षिप्रंरक्षमांतेजसांनिधे । ततः उत्तरांगपूजनंकृत्वा, प्रतिमादानंकुर्यात । ब्राह्मणं सम्पूज्य संकल्पंकुर्यात—अद्येत्यादिसंकीर्त्या मुकराशिरमुकोऽहं प्रतिशुक्रशांतिकर्मणि, द्विरागमनादि दोषानुपशये, इमांसारवशुक्र प्रतिमांकांस्यपात्रसहितां भृगुदैवत्यां रजतस्का ममुकगोत्रायामुकशर्म्मणे तुभ्यंसंप्रददे ॐ तत्सन्नमम एवं दानप्रतिष्ठांकृत्वा । कलशजलेन यजमानमभिषिंच्याशीर्दद्यात् ततो ब्राह्मणान्भोजयित्वा यथेष्ठगमनं यात्रादिकंकुर्यात् अत्रकेचिद्वंशपात्रे प्रतिमास्थापनं पूंजनंच वद्यन्ति यथासमाचारस्तथा कर्त्तव्यः । इति प्रतिशुक्रशांतिपद्धतिः ।

## अथ नवग्रहशांतिः ।

— . * —

### तत्रादित्य शांति ।

मदनरत्नेभविष्योत्तरे—आदित्यवारे हस्तेन पूर्वेद्युर्ये विचक्षण । मंत्रोक्तविधिनाम कुर्यात्पूजा समाहित । प्रत्यर्केऽन्नदानादि कृत्य भक्तिपरानरः । दद्यादाद्यमंत्राप्तं सूर्यमिष्ठायभोजनम् भास्करे सुदनोत्पत्तिरतयानेनतत्त्व । ताम्रपात्रे स्थापितयास्तपुष्पैः प्रपूजयेत । रक्तवस्त्रयुग्म [illegible] ध्वजोष्णयुग्मम् । [illegible] [illegible] सिंधुसे सुवर्ण [illegible]

समिधोष्टोत्तरशतमष्टाविंशतिरेवचहोतव्यामधुसर्पिर्भ्यांदध्नाचैव तेनच । अर्कगमिधः। मन्त्रेणानेनविदुषे ब्राह्मणायप्रदापयेत । अ दित्य नमस्तुभ्यंमस्तमर्त्य दिवाकर । त्वंगेऽणतारम्स्वाहना नस्मान्मंसारसागरात । सूर्यपोडासु घोर सु कृता शान्तिः शुभप्रदः ॥

अथचन्द्रशांतिः—तद्दुश्चिन्ताभ्युं गृह्यसोमय रविलक्षणः अनेनैवोक्तविधिनाकुर्यात्पूजादिकं विधोः। सप्तमेतुततः प्राप्ते कुर्याद्ब्राह्मण भोजनम् । सप्तकेऽरुणे । कांस्यपात्रेधस्थाप्य सोमंरजत सम्भवम् । श्वेतवस्त्रयुगन्धर्व श्वेतपुष्पैः प्रपूजनम् । होमंघृततिलैः कुर्यात्सोम नाम्नाचमंत्रवित् । समिधोऽष्टोत्तरशत मष्टाविंशतिरेनवा । होतव्यामधुसर्पिभ्यां दध्नाचैवघृतेन च । दध्यद्य शिखरे कृत्वा ब्राह्मणाय निवेदयेत । मंत्रेणानेन राजेन्द्र सम्यक् भक्त्या समन्वितः । महादेव जातिजन्मो पुण्य गोर्क्षीर पाण्डुर । सोम सौम्योभव स्माकं सर्वदाते नमो नमः।

अथ भौमशान्तिः—स्वात्या मंगारकं गृह्य समायां नक्त भोजनम् । पृथिव्यामेवनतुपात्रे भोजनम् । सप्तमेत्वथ संप्राप्ते हेमं ताम्रे निवेशयवे । रक्त वस्त्र युगन्धवं कुंकुमेना नुलेपितम् । निवेद्य भक्त्याकं सार पुष्प धूपा घृतादिभि । होमंघृत तिलैः कुर्यात्कुजनाम्नाचमंत्रवित । समिधोष्टोत्तरशत मष्टाविंशतिरेववा । होतव्यामधुसर्पिभ्यां दध्नाचैव घृतेन च । मंत्रेणानेन दद्या द्ब्राह्मणाय कुटुंबिने । कुज कुक्षभवोऽसिल मंगलः परिगद्यसे । अमंगलं निहत्याशु सर्वदा यच्छ मंगलम् । अथ बुधशान्तिः—विशाखासु बुधं गृह्य सप्त नक्तान्यथा चरेत । बुधंहैम मयंकृत्वा स्थापितं कांस्य भाजने । हरिद्रस युगन्धवं पीतमाल्यानु लेपनं । क्षीर षष्ठिक नैवेद्यं ब्राह्मणाय निवेदयेत । होमं घृततिलैः कुर्याद्बुधनाम्ना च मंत्रवित । समिधोष्टोत्तर शत मष्टाविंशतिरेवच । बुधत्वं बुद्धिजननो बोधवान्सर्वदा नृणाम् । तत्वावबोधं कुरुमे सोम पुत्रायते नमः ॥ अथ गुरु शान्तिः— गुरुं चैवानुराधासु पूजयेद् भक्तितोनरः पूर्वोक्तविधिना योगेसप्तनक्तान्यथा चरेत । हैम हेमममयंपात्रे स्थापयित्वा बृहस्पतिं । पीताम्बर युगन्धवं पीत माल्यविलेपनम् । पादुकोप नहच्छत्रका कुलु निभूषितम् । पूजयेत्पीत कुसुमैः कुंकुमेनविलेपितम् । धूपदीपादिभिर्दिव्यैः फलैश्चन्दन कुंडैः। खंडखाद्योपहारैश्च गुरोरग्रे निवेदयेत ॥ धर्मशास्त्रार्थ तत्वज्ञ ज्ञान विज्ञान पारग । विविधार्ति हराचिन्त्य देवाचार्य नमोस्तुते । होमं घृत तिलैः कुर्याद् गुरुनाम्ना च मंत्रवित् । समिधोष्टोत्तर शतमष्टाविंशति रेवच । होतव्या मधुसर्पिभ्यां दध्नाचैव घृतेनच । विधनस्थे गुरौकार्या महत् शान्तिरियंनृभिः । अथ शुक्र शांतिः—शुक्रं ज्येष्ठासु संगृह्यत्वाथा ( पृथिव्या ) नक्त भोजनम् । ( दिनस्याष्टमभागेवे ) गुरुक्त क्रमसागण द्विज संतर्पणेन च । सप्तमेत्वथ संप्राप्ते रौप्यं शुक्रन्तुकारयेत । वंशपात्रे च संस्थाप्य पूजयेत्सित पंकजैः । तदभावे सितैः पुष्पैस्तांबूलैश्चन्दनेनच । अथैतस्य प्रदातव्यं परमं धृत संयुतम् । दद्यादनेन मंत्रेण ब्राह्मणाय कुटुम्बिने । भार्गवो भार्गवश्च श्रुतिस्मृति विशारद । हित्वा

ग्रहकृतान्दोषानाशयारो यदोऽस्तु स । होम घृत तिलै कुर्याच्छुक नाम्नाच ? ग्रवित् । समिधोऽष्टोत्तरशत मष्टाविंशतिरेवच । अथशनैश्चरादि शान्ति शनैश्चरं राहुकेतू लोहपात्रेषु विन्यसेत । कृष्णागर स्मृतो धूपो दक्षिणाच 'यशक्तित । यथाक्रम शमीदूर्वा कुशाना समिध स्मृता । मानमेरथ सप्राप्तेतद्वर्णानथ कारयेत । कृष्ण वस्त्र युग ह्यस्मैकैक कारयेद्बुध । मृगलाभ्या ममालभ्य कृसरान्विनिदद्यात । होमावसाने तत्सर्व ब्राह्मणायोप पादयत । शनैश्चर नमस्तेऽस्तु नमस्ते राहुकेतवे । केतवे च नमस्तुभ्य सर्वशान्ति प्रयच्छमे । इति मदनरत्ने भविष्योत्तरे नवग्रह शान्ति विधि ॥

— * —

नवाष्टनवभूवर्षे, आश्विन्ये शुक्लपक्षके ।
दुर्गोत्सव दशम्यांच श्रवणर्क्षरवेर्दिने ॥१॥
आदित्यनामकेयंत्रे, इन्द्रप्रस्थे पुरेशुभे ।
संरच्यमुद्रितः कर्मकाण्डरत्नाकरोह्यसौ ॥२॥
चतुर्थस्तस्यचैवाऽसौ,खंडःशान्त्यादिकर्मणाम् ।
सम्पूर्णतामगादद्य गुरुपादानुकंपया ॥ ३ ॥
प्रशंसन्तुग्रन्थं विमलमनयः कर्मनिपुणाः ।
प्रवृत्तोनैवाहं जगतियशसः स्थापनकृते ॥
प्रबन्धव्याजेन स्वयमिह महत्कर्मसरणौ ।
मयाशङ्कापङ्को निजमनसिलग्नः परिहृतः॥४॥
नात्रातीवप्रकर्त्तव्यं दोष दृष्टिपरंमनः ।
दोषोह्यविद्यमानेऽपि तच्चित्तानांप्रकाशते ॥५॥

इतिवैदिक पं० देवानन्द डिमरीविरचित
कर्मकांडरत्नाकरस्यशांतिखंडश्चतुर्थः
॥ समाप्तः ॥
संपूर्णोऽयमग्रन्थः
ॐ शान्तिः ३

